*प्रथम संस्कृत संस्करण :* अगस्त 2015 श्रावण 1937
*पुनर्मुद्रण :* जुलाई 2020 श्रावण 1942



PD 153T RPS

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक (संस्कृत)** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन, सज्जा तथा आवरण**– निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत,* दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत,* संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर,* साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष,* संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक,* सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टेंट प्रोफ़ेसर,* व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक,* केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष,* संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष,* प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110 016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा अमर उजाला पब्लिकेशन्स लिमिटेड, सी-21, सेक्टर-59, नोएडा 201301 द्वारा मुद्रित।

ISBN 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-788-7

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः – 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

**प्रकाशन सहयोग**

अध्यक्ष, प्रकाशन प्रभाग : *अनूप कुमार राजपूत*
मुख्य उत्पादन अधिकारी : *अरुण चितकारा*
मुख्य संपादक : *श्वेता उप्पल*
मुख्य व्यापार प्रबंधक : *विपिन दिवान*

# मिम्याः कृते किं नयानि ?


माधवः


मिमी





माधवस्य पार्श्वे एका अजा आसीत्।
तस्या: अजाया: नाम मिमी आसीत्।
माधव: मिम्याम् अधिकं स्निह्यति स्म।
मिमी अपि माधवस्य अदूरे एव विचरति स्म।




मिम्याः वर्णः शबलः आसीत्।

तस्याः कर्णौ दिर्घौ आस्ताम्।

मिम्याः केशाः भृशं भासन्ते स्म।

मिम्याः नेत्रे रम्ये आस्ताम्।





मिमी सु-कोमला आसीत्।
माधवः आदिनं तां स्नेहेन स्पृशति स्म।
सः ताम् अङ्के धृत्वा भ्रमति स्म।
माधवाय मिम्याः सु-कोमलौ कर्णौ अतितरां राचेते स्म।





मिमी एक–वर्षीया अभवत्।
मिम्याः जन्म–दिवसः आगतः।
माधवः तस्याः जन्मदिनम् अनुष्ठातुम् इच्छति स्म।
सः मिम्याः कृते उपहारं क्रेतुम् इच्छति स्म।




माधवः मातरम् उपहाराय रुप्यकाणि याचितवान्।
माता विंशति–रुप्यकाणि दत्तवती।
माधवः मिमीं स्नापयित्वा सज्जीकृतवान्।
सः मिमीं नीत्वा विपणिं प्रति प्रस्थितवान्।



माधवः मिम्याः रज्जुं गृहीतवान् आसीत्।
किञ्चित्कालानन्तरं माधवः रज्जुं मुक्तवान्।
मिमी झटिति इतस्ततः अकूर्दत्।
माधवाय मिम्याः उच्छलनं कूर्दनं च अतितराम् अरोचत।





विपणौ प्रथमः आपणः कान्दविकस्य आसीत्।

आपणे बहूनि मिष्टान्नानि आसन्।

कान्दविकस्य सविधे बहूनि मोदकानि रसगोलकानि च आसन्।

तस्य समीपे प्रभूतं दुग्धं, दधि प्रपानकं च आसीत्।





तदैव माधवस्य दृष्टिः अपरत्र स्थितेषु मिष्टान्नेषु अपतत्।

तत्र रसगोलकानि कुण्डलिकाः किलाटपिण्डानि च स्थापितानि आसन्।

माधवः अचिन्तयत् यत् मिम्यै किं नेतव्यम्?

पुटक-परिमिताः कुण्डलिकाः कीदृश्यः भविष्यन्ति?





अग्रिमः वस्त्राणाम् आपणः आसीत्।

बहवः जनाः वस्त्राणि क्रीणन्तः आसन्।

तत्र यूतकानि, कञ्चुकानि पादांशुकानि च अवलम्बितानि आसन्।

काच–पाटिकायां कानिचित् वस्त्राणि स्थापितानि आसन्।







माधवः यूतकानि प्रति द्रष्टुं प्रारभत।

सः पीतानि, नीलानि, हरितानि पाटलानि च यूतकानि अपश्यत्।

माधवः अचिन्तयत् यत् मिम्याः कृते किं नेतव्यम्?

रक्त-शीकरयुक्तं कॉलर-युक्तं च यूतकं कीदृशं भविष्यति?





अग्रिम आपण: पात्राणाम् आसीत्।
आपणे बहूनि पात्राणि आसन्।
तत्र बहूनि लौहसार-निर्मितानि पात्राणि आसन्।
कानिचित् पित्तलकानि पात्राणि अपि आसन्।





माधवः सर्वाणि पात्राणि द्रष्टुम् आरब्धवान्।
तत्र स्थालिकाः, कटोरिकाः, चमषाः, चषकाः स्थापिताः च आसन्।
माधवः अचिन्तयत् यत् मिम्याः कृते किं नेतव्यम्?
दुग्धाय एकं कटोरं कथं भविष्यति?





अग्रिमः आपणः लौहकारस्य आसीत्।
तस्य आपणे विभिन्नानि वस्तूनि आसन्।
तत्र अञ्जीशानि, कटाहाः, शृङ्खलाः कीलानि च आसन्।
लौहकारः अग्निकुण्डे किमपि निर्माति स्म।





माधवः सर्वत्र दृष्टिं क्षिप्तवान्।
माधवः अचिन्तयत् यत् मिम्याः कृते किं नेतव्यम्?
तस्य दृष्टिः नूपुरेषु पतिता।
माधवः मिम्याः कृते नूपुराणि क्रीतवान्।





माधवः मिम्याः पादयोः नूपुराणि अबध्नात्।
नूपुराणि रक्तवर्णेन रमणीयेन सूत्रेण बद्धानि आसन्।
कूर्दमाना मिमी माधवेन सह अचलत्।
सर्वे जनाः तस्याः नूपुराणां छुन्-छुन्-रवं श्रोतुम् आरब्धाः।

# काजल-माधवयोः अपराः कथाः



















